ॐ

# । श्रीदीक्षाविधिनिबन्धः ।

श्रुतिस्मृतिपुराणाशयविभूषितः ।

श्रीवृन्दावननिवासि श्रीनन्दकिशोरशास्त्रि
सुतेन पण्डित दुर्गादत्तशर्म्मसामवेदिना
विरचितः ।

अग्रवालवैश्यान्वयि श्रीबैजनाथपुत्रेण रघुबरदयालुगुप्तेन
मुद्रापयित्वा प्रकाशितः ।

त्रिपाठि श्री देवकीनन्दनविदुषा संशोध्य
प्रयागस्थविद्याधर्मवर्द्धकयंत्रालये
मुद्रितः
वैक्रमाब्द १९५३
पं० राधामोहनशुक्ल के प्रबंध से विद्याधर्मवर्द्धक यंत्रालय
प्रयाग में मुद्रित ।

सन १८९७

माघ शुक्ल

# विज्ञापन ।

—0※❋※0—

बिदित हो कि यह ग्रन्थ इटावा निवासि वैश्य अग्रवाल तायल गोत्र लाला बैजनाथ जी के पुत्र लाला रघुबर दयालु जी ने ग्रन्थकर्ता की आज्ञा ले कर बिना मूल्य देने को छपवाया है । सो निम्न लिखित स्थान से स्पष्ट अक्षरों में पत्र द्वारा ठिकाना और )॥ टिकट डाक व्यय भेजने से मिल सकेगा ॥

पुस्तक मिलने का पता

पण्डित दुर्गादत्त शर्म्मा

बृन्दावन अठखम्भा जिला मथुरा ।

# । दीक्षाविधिनिबन्धः ।

## श्री मन्महागणाधिपतये नमः ।

कृष्णपदार्पितकर्मा धर्माऽवनकारितनुवर्मा । हरिनारायणश-र्म्मा गुरु र्गति र्म्मे सदा भूयात् १ तातनन्दकिशोरांघ्रिं नत्वाऽम्बां च करोम्यहं । दीक्षाविधिनिबंधं श्रीरामनारायणाज्ञया २ प्राकृतत्वं निबंधेऽस्मिं इच्छंक्षनीयं न साधुभिः । शास्त्राप्तवचनैरेव दीक्षासिद्धांतवर्णनात् ३ मानुष्यं दुर्ल्लभं प्राप्य मुक्तिद्वार मपावृतं । किं विधेयं जनेनेति शंकायां त्विद मुच्यते ४ यदीच्छेत्कुशलं स्वस्य भवरोगनिवर्तनं । संश्रये त्सर्वभावेन परमात्मानमीश्वरम् ५ तं बिना कोपि न त्रातुं समर्थो भवबारिधेः । तस्मात्सर्वप्रयत्नेन परमात्मान माश्रयेत् ६ सैव माता पिता भ्राता सुहृ त्संबंधिबांधवः । लोकद्वयपरित्राता शरण्यः करुणामयः ७ अतो बुद्धिमता दीक्षा संग्राह्या तस्य लब्धये । इष्टदीक्षाविहीनस्य न सुखं न परा गतिः ८ कुलीना पि सुरूपा पि बिद्यागुणयुतापि वा । स्त्री नष्टा स्याद्यथा हीना पाणिग्रहणदीक्षया ९ तथैव दीक्षया हीनो रूपबिद्यादिसंयुतः । कुलीनोपि भवेन्नष्टः सत्यं सत्यं न संशयः १० बिबाहदीक्षारहिता शतपुत्रयुता पि वा । पुंश्चली जायते नारी दीक्षाहीन स्तथा पुमान् ११ अतः सर्बप्रयत्नेन मंत्रदीक्षां चरेद् बुधः । दीक्षितस्याशु सिध्यंति सर्बे र्थो मंत्रतंत्रजाः १२ एतदेव शिवः प्राह स्वप्रियां पार्बतीं प्रति । सर्बलोकहितार्थाय दयालु र्हितकारकः १३ अदीक्षितस्य वामोरु कृतं सर्बमनर्थकं । पशुयोनि मवाप्नोति दीक्षाहीनो मृतो नरः १४ विना सच्छास्त्रजां दीक्षां प्रसादं श्रीगुरो र्विना । विना वर्णाश्रमाध्वानं कथं तत्वज्ञता भवेत् १५ ॥ बृहद्गौत्तमीये ऽपि ॥ दीक्षा हि जगतस्त्राणं दीक्षा हि परम न्तपः । अदीक्षितस्य

मरणे प्रेतत्व मैव मुच्यते १६ तपस्तमं देवतादिजपनं दान मेव च । अकृतान्यपि यानि स्यु र्वृथा दीक्षां बिना मुने १७ वर्णी वाथ गृहस्थो वा वानप्रस्थो यति स्तथा । दीक्षाहीना न मुच्यन्त इत्याह भगवाञ्छिवः १८ अतो धिकारसंप्राप्त्यै देवाग्नि गुरुपूजने । अवश्यमेव सग्राह्या मंत्रदीक्षा मुमुक्षुणा १९ मंत्रदीक्षा स्वरूपं तु तंत्रग्रंथेषु दृश्यते । स्कांदपाद्मादिषु तथा तद्दिङ्मात्रं प्रकथ्यते २० यदृच्छया श्रुत मवापि छन्नेनापि च्छलेन वा । पत्रे स्थितं वा गाथायां वर्जये त्तदनर्थवत् २१ मंत्रमार्गानुसारेण साक्षा त्कल्पेष्टदेवतां । गुरुश्चे द्बोधये च्छिष्यं मंत्र दीक्षेति सोच्यते २२ तदुक्तं नारदेनापि पंचरात्रे दयालुना । कलिदीक्षा निवृत्यर्थं दीर्घकालानुदर्शिना २३ शृणु दीक्षां प्रवक्ष्यामि शिष्याणां भावितात्मनां । देवाग्निगुरुपूजादा वधिकारो यथा भवेत् २४ गुरूपसत्ति दीक्षायाः कारण म्प्रथमं स्मृतम् । इत्यादि बहुभिर्वाक्यैः स्मृता दीक्षा गुरोः पदात् २५ प्रवृत्ति र्भगवन्मार्गे न जायेत गुरुं बिना । तस्माद्‌ गुरुपदांभोजं संश्रये न्मुक्तिसिद्धये २६ तथैवैकादशस्कंधे श्रीमद्भागवतस्य च । उक्तं श्रीकृष्णचंद्रेण वेदमार्गानुदर्शिना २७ लब्ध्वा सुदुर्लभ मिदं बहुसंभवांते मानुष्य मर्थद मनित्य मपीह धीरः। तूर्णं यतेत न पते दनुमृत्युयाव न्निश्रेयसाय विषयः खलु सर्वतः स्यात् २८ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमं । इत्यादिकं तथा वेदस्तुतावपि समीरितम् २९ विजितहृषीकवायुभि रदांतमनस्तुरगं य इह यतन्ति यं तु मतिलोल मुपायखिदः । व्यसनशतान्विताः समवहाय गुरोश्चरणं म्वणिज इवाज संत्य कृतकर्णधराजलधौ ३० तद्बोधार्थं सद्गुरुं संश्रयेत समित्पाणिं श्रोत्रियं ब्रह्मनिष्ठं आचार्य्यवान् पुरुषो वेद तत्व मित्यर्थाढ्या वेदवाऽप्यस्तिवाणी ३१ ॥ वृहद्गौतमीयेपि॥ यो नाऽधीते

गुरोर्वक्रा न सिध्येत्कोटिजन्मभिः बुद्ध्या वेदार्थबोद्धापि मज्ज तीह भवांबुधौ ३२ गुरूपदेशरहितःस्वीयप्रज्ञासमन्वितः घृतश्च पुच्छ स्वंत्यक्त गोपुच्छ इव मज्जति ३३ ॥ तथा रामोपनिषदि प्रोक्तो गुरुपदान्मनुः। शास्त्रं पुष्पपुराणेषुविस्तरादत्र नोच्यते३४ एवं शास्त्राशयं ज्ञात्वा श्रीगुरो दृढनिश्चयः। गृह्णीयाच्छ्रीगुरो र्मंत्रं श्रद्धाभक्तिसमन्वितः ३५ अथ मे वक्ष्यते मंत्रसिद्धैय श्रीगुरु लक्षणं बहिरंतरभेदेन द्विविधं शिष्यसिद्धिदम्३६ ॥पाद्मे॥ महा भागवतश्रेष्ठो ब्राह्मणोवै गुरुर्नृणां। सर्वेषा मेव लोकाना मसौ पूज्यो यथा हरिः ३७ शब्दब्रह्म परब्रह्म निस्नातो ध्यानतत्परः। शिष्ये पुत्रे तुल्यदृष्टि र्दयालु र्दुर्मसंशयः ३८ वर्णाश्रमसमाल्बी सं- ध्योपासनतत्परः। सुधीरः संशयोच्छेदी कामक्रोधविवर्जितः३९ ब्रह्मण्यो वेदतत्वज्ञः कुलीनो भक्तितत्परः। शिष्योपदेशरसिकः सेवेच्छापरिवर्जितः ४० शुद्धयोपाहृतं यत्तत् पत्रपुष्पफलादिकम्। गृह्णाति यो मुदा शिष्या त्संतोषी गुरु रुच्यते ४१ नित्यं नैमि त्तिकं कर्म यो न द्वेष्टि कदाचन। स एव गुरुतां याति वेदमार्ग प्रचारकः ४२ अमान्य ऽमत्सरो दक्षो निरालस्यो जितेन्द्रियः। अद्वेष्टा पक्षरहितः परनिंदाविवर्जितः ४३ गृहस्थो ब्रह्मचारी वा गुरुः स्या दुक्तलक्षणः। ब्राह्मणेन्द्रः स एव स्या दाराध्यो दैवतै रपि ४४ ॥सारदायां च॥ मातृतः पितृतः श्रेष्ठः शुद्धभावो जितेन्द्रियः। सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्वबित् ४५ परोपकारनिरतो जपपूजादितत्परः। अमोघवचनः शांतो वेद बेदार्थपारगः ४६ ॥ अगस्त्यसंहितायां च ॥ तत्वज्ञो मंत्रयंत्राणां मर्मभेत्ता* रहस्यवित्। पुरश्चरणकृद्धोममंत्रसिद्धः प्रयोगवित् ४७ तपस्वी सत्यवादी च गृहस्थो गुरु रुच्यते। नैष्ठिकब्रह्मचारी वा यथा श्रीनारदादयः ४८ उपदेशेषु कुशलः सर्वांगाऽवयवान्वितः तत्वबोधाय शिष्येषु सदैवादृतमानसः ४९ ॥ अथ विष्णुस्मृतौ

* भ्रमहर्ता

ये च निषिद्धा गुरुकर्मणि । अधुना ते प्रकाश्यंते नीचावर्णजध-
र्मिणः ५० परिचर्या यशोलाभलिप्सुः शिष्याद् गुरुर्नहि कामा
द्वा लोभतो वापि गृह्णीया द्यदि दक्षिणां ५१ तस्मिन् गुरौ च
शिष्ये च देवताशाप आपतेत् । तेन हानिः प्रजायेत लोकयो
रुभयोरपि ५२ ॥ तत्वसागरे ॥ कालदंतो सितोष्ठश्च दुर्गंधः
श्वासदाहकः । बह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः ५३
हेतुवादरतो दुष्टो ऽ वाग्वादी गुणनिन्दकः दुष्टलक्षणसपन्नो
यद्यपि स्वय मीश्वरः ५४ बहुप्रतिग्रहाशक्तो गुरु र्न स्या त्कदा
चन । तथा कुष्ठादिरोगार्तो गुरुः कार्यो न कर्हिचित् ५६
पाखण्डिनो विकर्मस्थान् वैडालवृत्तिकान् शठान् । हेतुकान्
वकवृत्तींश्च दूरतः परिवर्जयेत् ५७ गुरुत्वं नाचरे न्मोहाद्
ब्राह्मणा दितरो जनः । यद्याश्रये द्धिमूढात्मा धर्मतः पतितो
भवेत् ५८ वैतरण्युद्धरं शक्तिं धेनोरेव यदि श्रयेत् । कुक्कुरस्तर्हि
नश्येत मज्जये दाश्रित च वै ५९ नास्तिका दांभिकाः पापा
लोकद्वयविवर्जिताः । चरंति धनलोभेन नीचवर्णाः सुवेषिणः ६०
पुंश्चलीपतयः क्रूरा नानामतधराः खलाः । शठास्ते दूरतो हेया
गुरुत्वे ऽधर्मभीरुणा ६१ ॥ इति श्रीसार्वभौमदिश्रीनन्दकशोरात्मज
दुर्गादत्तकृते दीक्षाविधिनिबन्धे दीक्षावश्यकत्वगुरुलक्षणसंपा
दकं प्रथमं प्रकरणम् ॥ १ ॥ अथातो लक्षणं वक्ष्ये शिष्यस्यापि
समासतः । बहिरंतरभेदेन गुरुधर्मार्थसाधकं १ मिथ्याभूतं जग
त्सर्वं सत्यस्तु परमेश्वरः । इति निश्चयवान्धीरो मुमुक्षुः शिष्य
उच्यते २ नानायोनिषु लभ्यन्ते विषयास्तु न वै हरिः । स
एवातोऽत्र संसेव्य इति धीः शिष्य ईर्यते ३ दुर्लभ म्मानुष न्देहं
ज्ञात्वा हीनं क्षणे क्षणे । लोकद्वयविरागी यः स शिष्यो गुरु
भक्तिमान् ४ महापद्भ्यः समुद्धर्ता ब्रह्मतत्वप्रदर्शकः गुरु रेवेति
निश्चित्य गुरुधीः शिष्य उच्यते ५ ॥ श्रीभागवते ॥

अमान्य ऽ मत्सरो दक्षो निर्ममो दृढसौहृदः। असत्वरो ऽ र्थजिज्ञासु रनसूयु रमोघवाक् ६ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु। उदासीनः समं पश्यन् सर्वेष्वर्थ मिवात्मनः ७ विलक्षणः स्थूलसूक्ष्मा देहा दात्मेक्षिता स्वदृक्। यथाग्नि र्दारुणो दाह्या द्दाहकोऽन्यः प्रकाशकः ८ निरोधोत्पत्त्य ऽ णुबृह न्नानात्व तत्कृतान् गुणान्। अतः प्रविष्ट आधत्ते एवं देहगुणान्परः ९ योऽसौ गुणै र्विरचितो देहोयं पुरुषस्य वै। संसार स्तन्निबधो यं पुंसो ऽ विद्या च्छिदात्मनः १० तस्मा ज्जिज्ञासयात्मान मात्मस्थं केवलंपरम्। संगम्यनिरसे देत द्वस्तु बुद्धिन् यथाक्रमम् ११ इति भागवतोक्तिभिः प्रतिलक्षण मनन्यधीः। तत्वाभिसाधनो योगचेताः शिष्य उदाहृतः १२॥ गौतमीये पि॥ शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः। अधीत वेद कुशलः पितृमातृहिते रतः १३ धर्मवि द्धर्मकर्ता च गुरुशुश्रूषणे रतः। सच्छास्त्रार्थस्य तत्वज्ञो दृढदेहो दृढाशयः १४ हितैषी प्राणिनां नित्यं परलोकार्थकर्मकृत्। वाङ्मनः कायवसुभि र्गुरोर्हितकरः सदा १५ अनित्यकर्मणस्त्यागी नित्यनुष्ठान तत्परः। जितेन्द्रियो जितालस्यो जितमोहो विमत्सरः १६ एव म्विधो भवे च्छिष्य स्त्वितरो गुरुदुःखदः। अवेदी दूरत स्त्याज्यो मंत्रदाने सुबुद्धिना १७ ॥ मंत्रमुक्तावल्यां ॥ शिष्यः शुद्धान्वयः श्रीमान् विनीतः प्रियदर्शनः। सत्यवाक् पुण्य चरितो ऽ दभ्रधी र्दंभवर्जितः १८ कामक्रोधपरित्यागी भक्त श्च गुरुपादयोः। इत्यादि लक्षणै र्युक्तः शिष्यो भवति नान्यथा १९ अथोच्यन्ते निषिद्धा येमंत्र दाने नराधमाः। गुरुकीर्तिहराः पापा लोकद्वयपराङ्मुखाः २० अश्रद्दधाना विश्वासरहिताः कुसपासनाः। निंदका ना स्तिकाः क्रूरा स्तथा स्वेच्छाविहारिणः २१ मत्सराकुलचित्त श्च परवस्त्वपहारकः॥ मातृपितृकुला

चार्यगुरुसेवाविवर्जितः २२ वर्णाश्रमविहीन श्च नित्यकर्मवि-
वर्जितः । गणिकालंपटः कामी क्रोध लोभपरायणः २३ वेद
शास्त्र गुरूक्तीनां स्वतर्केण विखंडकः । गुरुद्रव्येच्छया सेवी
दंभी धर्मध्वजः खलः २४ इत्याद्यपगुणै र्युक्तो यदि साक्षात्
पुरंदरः । नोचार्यः क्वापि शिष्येति मन्त्रदाने तु का कथा २५
अगस्त्यसंहितायां च तथैव प्रतिपादितम् । अलसा मलिना
क्लिष्टाः दांभिकाः कृपणास्तथा २६ दरिद्रा रोगिणो ऽ तुष्टा
रागिणो भोगलालसाः । असूयामत्सरग्रस्ताः शठाः परुष
वादिनः २७ अन्यायोपार्जितधनाः परदाररताश्चये । गृहिणी
दासरूपा श्च हेया मूढाः श्वपाकवत् ॥२८॥ ॥ नारदीयेपि ॥
दांभिकं भिन्नमर्याद नास्तिकं लुब्धचेतसं । विद्वान् नैवानु
गृह्णीया त्तं शिष्यं नरकप्रदम् २९ विशेष श्चा ऽत्र कथितः
शरणागतवत्सलैः ॥ वेदशास्त्राशयाभिज्ञैः सो ऽपि चा ऽद्य
प्रकाश्यते ३० सर्वलक्षणहीनोपि गुरौ देवे च भक्तिमान् प्राय
श्चित्तेन संशोध्य सो ऽनुग्राह्य इतीश्वरः ॥३१॥ ब्राह्मणः क्षत्रि
यो वैश्यः सच्छूद्रोपि तथैव च । गुर्वीश्वरपदासक्तो ह्यनुग्राह्यो
दयालुना ३२ तत्रायं विधि रप्युक्तः शास्त्रै र्मंत्रसमर्पणे । वर्णत्र
यं वेदमंत्रै र्युज्या च्छूद्रं पुराणजैः ३३ शूद्रव च विधिः स्त्रीणां
प्रोक्तो मंत्रसमर्पणे । वेदशास्त्राशयाभिज्ञै र्व्यभिचारनिवृत्तये
३४ अवश्यं मंत्रदानं च नारीणा मपि युज्यते । जपा त्तस्य
भवेयुस्ताः पतिप्रेमपरायणाः ३५ इत्येव मुक्तं मुनिना नारदेन
दयालुना । स्त्रीणां विशेषतो दद्या त्पतिभक्ति समन्वितम् ३६
तथा पुराणे ब्रह्मांडे ब्रह्मवाक्यं प्रकाशते । सभर्तृका वा
विधवा विष्णुभक्तिं करोति या ३७ समुद्धरति चात्मानं
कुलमेकोत्तरं शतम् । गुरुमंत्रजपा द्देवः पतिभक्त्या च तुष्यते ३८
अस्त्यत्रविषये शंका ऽन्योन्यं शास्त्रविरोधतः ॥ स्त्रीणां दीक्षा

निषेधत्वा त्सा तु मेद्य प्रकाश्यते ३९ नासां द्विजातिसंस्कारो न निवासो गुरावपि । इति भागवते ऽ प्यस्ति तथा वाक्यं स्मृते रपि ४० नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् पतिं शुश्रूषये द्या तु तेन स्वर्गे महीयते ४१ इत्यादि वाक्यै र्बहुभिः स्त्रीणां नास्ति धवेतरः । गुरु र्दीक्षाधिकारो वा अत्र सिद्धांत ईर्यते ४२ निषेधो येषु वाक्येषु तत्तात्पर्य मिदं स्मृतम् । बिलोड्य शास्त्रसिद्धांतं व्यासाद्यै स्तत्वदर्शिभिः ४३ पतिसेवाबिरोधः स्या द्येषु यज्ञादिकर्मसु । तानि नैवाचरेत् साध्वी पृथग्भूत्वा पतिव्रता ४४ वृहद्व्यासस्मृतौ चैतत्स्पष्ट मेव समीरितम् । न पृथग्विद्यते स्त्रीणां त्रिवर्गबिधिसाधनम् ४५ इत्यादिशास्त्रवाक्येषु स्पष्टं कामादिबर्जनम् । मंत्रदीक्षाधिकारे तु नास्ति स्त्रीणा मऽनर्हता ४६ वाक्ये भागवतस्या पि नास्ति दीक्षानिषेधता । निषेधस्तु द्विजातित्वे गुरुगेहस्थितौ परम् ४७ अत एव हि नारीषु मंत्रदानं न वर्जयेत् । मंत्रेऽ्पांत- र्विशुद्धि श्च पतिसेवासहायता ४८ पत्यु श्च सेवया मुक्ति रित्यर्थं मंत्रसेवनम् । नारीणां कथितं प्राज्ञै र्हरिभक्ति स्तथास्मृता ४९ धवे हराव ऽ भेदेन भक्तिः स्यान्मुक्तिसाधिका । पतिरूपी जगन्नाथ इति नारी विचिंतयेत् ५० श्रीमद्भागवतस्यापि षष्ठस्कंधे समी रितम् । द्वयो रभेदाश्रयणं कश्यपेनादितिं प्रति ५१ पति रेव हि नारीणां दैवतं परमं स्मृतम् । मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ५२ स एव देवतालिंगै र्नामरूपविकल्पितैः । ईज्यते भगवा न्पुंभिः स्त्रीभि स्तु पतिरूपधृक् ५३ तस्मा त्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे । यजन्ते ऽनन्यभावेन पति मा- त्मान मीश्वरम् ५४ ॥ सप्तमेपि ॥ या पतिं हरिभावेन भवे त्स्त्री रिवतत्परा । हर्यात्मना हरे र्लोके पत्या श्री रिव मोदते ५५ इत्याद्युक्तिभि राचार्यैः पतिभक्तिसमन्वितम् । मंत्रं दद्या च्च

नारीणां श्रीकृष्ण ५ भेदसंश्रयम् ५६ नमः श्रीपतिकृष्णाय प-तीशः शरणं मम। पतिब्रह्म*पदांभोजं प्रपद्ये मंत्र कल्पना ५७ एवं नारीषु दीक्षाया अधिकारः परः स्मृतः। उल्लघने विधे र्न स्या दिति शास्त्रस्य निर्णयः ५८ ॥ इति श्रीसामवेदिश्रीनन्द किशोरशास्त्रिसूनुदुर्गादत्तकृते दीक्षाविधिनिबंधे शिष्यलक्षणा-धिकारसंपादकं द्वितीयं प्रकरणम् ॥ २ ॥

अथोक्तलक्षणो विप्र आचार्य श्शोक्त लक्षणम्। शिष्यं मंत्रेण युंजीत तत्रायं विधि रुच्यते १ तावच्छिष्यं संपरीक्ष्य गुरुः पूर्वो क्तलक्षणः। ज्ञाता तद्गुणदोषाणां मंत्रदाने मनश्चरेत् २ तथो क्तलक्षणः शिष्यो गुरुं पूर्वोक्तलक्षणम् ॥ विज्ञाय संश्रयेद्भक्त्या ब्रह्म ज्ञानप्रसिद्धये ३ सुमुहूर्ते तु संशोध्य विष्टिदुर्योगवर्जितम्। प्राय श्चित्तं ततः कुर्या त्पूर्वोपात्तां हसां तथा ४ ब्रह्मकूर्च※ निषे वेत ततो दीक्षाविधिं चरेत्। गृहकार्ये यथोत्साह स्तथोत्साह युतो भवेत् ५ श्रद्धया तुष्यते देवः श्रद्धया परमं पदं। श्रद्धाविश्वास सहितः सर्वान्कामा नवाप्नुते ६ अतः श्रद्धान्वितः शिष्यो मंत्र ग्रहणसिद्धये। कुण्डमण्डपखेटादिवेदिकादीन्प्रकल्पयेत् ७ पुरो हितं स्वकुलजान्सुहृत्संबंधिबांधवान्। आह्वयेद्धर्मिणो लोकान् विधिज्ञान्ब्राह्मणोत्तमान् ८ गीतवाद्यरतान् भक्तास् शान्ता न्वै सत्कुलस्त्रियः। गुरुब्रह्मरसोपेतं गीतगानं च कारयेत् ९ एकाग्रमानसो भूत्वा श्रद्धाभक्तिसमन्वितः। गणग्रहादीन्संपूज्य वेदिकायां यथा क्रमम् १० ततः शास्त्रोक्तविधिना मंत्र ग्रहण मुत्तमम्। व्ययाच्चैव न भेतव्यं जन्मसाफल्यता यतः ११ अथ निष्कामभक्तानां मुमुक्षूणां महात्मनां। मुहूर्ता द्याग्रहोना स्ति त्विति शास्त्रेषु दृश्यते १२ ॥ रुद्रयामले ॥ सतीर्थे ५ र्क विधुग्रासे तंतुदामनपर्वणोः मंत्रदीक्षां प्रकुर्वीत मासर्क्षादि न शोधयेत् १३ सल्लग्नचंद्रतारादिबल मत्र सदैव हि। लब्धेर

* इति शूद्रस्त्रीविषये श्रीरम् द्विजस्त्रीणां सामवेदमंत्रय

मन्त्रोऽत्र दीर्घायुः संपत्सततिबर्द्धनः १४ ॥ अन्यत्र च ॥ सूर्य ग्रहणकालेन समानो नास्ति कश्चन । तत्र यद्यत्कृतं सर्व मनन्तफलदं भवेत् १५ न मासतिथिवारादिशोधन सूर्यपर्वणि मन्त्रदो दक्षिणां तत्र गृह्णीयाद् ग्रहणादनु १६ ॥ तत्वसागरे च ॥ दुर्लभे च गुरूणां च सकृत्संग उपस्थिते । तदनुज्ञाय दालब्धा स दीक्षावसरो महान् १७ ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि । आगच्छति गुरुर्दैवा द्यदा दीक्षा तदाज्ञया १८ यदैवेच्छा तदा दीक्षा गुरो राज्ञानुरूपतः । न तीर्थं न व्रतं होमो न स्नानं न निजक्रिया १९ दीक्षायाः कारणं किंतु स्वेच्छा प्राप्ते तु सद्गुरौ । अत श्चायु रविश्वासा द्विचारावसरो नहि २० अत एवासमर्थस्य मुख्यकल्पे जनस्य च । संक्षिप्त श्चाथ दीक्षाया विधि रेषः प्रकाश्यते २१ उक्तकाले तु संप्राप्ते सर्वतोभद्रमण्डले । नूतनं गंधपुष्पादिमण्डितं कलशं न्यसेत् २२ वस्त्रावृत मपयःपूर्णं पंचपल्लवसंयुतम् । सर्वौषधिपंचरत्नमृत्स्नसप्तकगर्भितम् २३ अश्वस्थाना द्गजस्थाना द्वल्मीका च्च चतुष्पथात् । राजद्वारा च्च गोष्ठा च्च नद्याः कूला न्मृदः स्मृताः २४ ततो देवान् समभ्यर्च्य गणराज ग्रहादिकान् । यथा लब्धोपचारै श्च गंधपुष्पाक्षतै स्ततः २५ भतया शिष्योऽजलौ धृत्वा गंधपुष्पाक्षतादिकम् । गुरोः समीप मागत्य प्रार्थयेद् गुरु माऽऽनतः २६ त्रायस्व भो जगन्नाथ गुरो संसारवह्निना । दग्धं मां कालदष्टं च त्वा महं शरणं गतः २७ इति संप्रार्थ्य बहुधा नमस्कृत्य पुनः पुनः । ध्यात्वा समीपे संतिष्ठेत् पश्चात् कुर्या दिदं गुरुः २८ इष्ट मभ्यर्च्य तं कुंभं कुशकूर्चेन देशिकः । देय मन्त्रेण साष्टं तु सहस्र मभिमंत्रयेत् २९ तदद्भिः पूर्ववच्छिष्य मभिषिच्योपस्थितम् । प्रांजलिम् प्रणतं स्वस्य चन्दनेन विभूषयेत् ३०

यज्ञोपवीत न्दत्वा च जपमालां सुशोभनाम्। शास्त्रोक्तविधि संशुद्धां दद्या च्छिष्याय धीमते ३१ पूर्वाभिमुख मङ्कस्थं कृत्वा शिष्यं कृतांजलिम्। मन्त्र न्दद्या त्सिद्धिकरं चोत्तराभिमुखो गुरुः ३२ शिष्यस्य दक्षिणे कर्णे मन्त्रदान म्प्रशस्यते। धृत्वा तन्मस्तके हस्त म्वाद्यघोषपुरःसरम् ३३ शूद्राणां च तथा स्त्रीणां मालादानं हि केवलम्। कुंकुमं सधवानां च रण्डानां चदन न्ददेत् ३४ शिक्षां संश्राव्य सुमना उपस्थाप्य मनुं दिशेत्। पुराणोक्तविधानेन विशेषो ऽयं द्विजातितः ३५ मन्त्रः सुसिद्धः सिद्धो वा शिष्यमात्रेषु सौख्यदः। अरिस्तु सर्व था त्याज्यः सकामानां त्वऽय म्विधिः ३६ तत्रापवाद वदति श्रीरामार्चनचन्द्रिका। केवलं क्रूरदेवानां मन्त्रे सिद्धादि शोधनम् ३७ नृसिंहार्कवराहाणां प्रसाद प्रणवस्य च। वैदि- कस्य च मन्त्रस्य सिद्धादीन् नैव शोधयेत् ३८ पुराणोक्तस्य च तथा तन्त्रे ऽपि भवकृष्णयोः। इत्याद्युक्तिभि रालब्धो मोक्षमार्गे ह्यनाग्रहः ३९ अथ सम्प्राप्तदीक्षस्तु भक्तयोपार्जित वस्तुभिः। शिष्यो ऽर्चयेद् गुरुं भक्त्या दण्डवत्प्रणमे द्भुवि ४० ततो होमं सुसाकल्यैः पायसेन घृतेन वा। कृत्वा ऽर्चयेद् गुरुं भूयः शक्तिपूर्वं सुवस्तुभिः ४१ ततो ऽर्चये त्कुलाचार्यं यथा शक्ति द्विजा नपि। नत्वा स्वकुलवृद्धादी न्प्रसादं विभजेत्ततः ४२ सम्भोज्य गुरुविप्रादीन् गुरोरुच्छिष्टभा ग्भवेत्। इत्येवं करणा न्नूनं दीक्षासिद्धिः प्रजायते ४३ अथोपदेशो ऽसक्तानां तत्वसारे ऽन्य एव हि। अत्राप्यसक्तः कश्चि त्तं दक्ज मभ्यर्च्य सादतम् ४४ तदम्भसा ऽभिषिच्याष्टवारान् मूलेन के* करम्। निधायाऽमुं जपे त्कर्णे उपदेशे त्वयं विधिः ४५ चंद्रसूर्य्य ग्रहे तीर्थे सिद्धक्षेत्रे शिवालये। मंत्रमात्रप्रकथन मुपदेशः स उच्यते ४६ अत्रा ऽपि च विशेष स्तु शिष्यदुःखनिवृतये।

* के, मस्तके।

पंचरात्रे प्रकथितो नारदेन सुरर्षिणा ४७ वित्तलोभा द्वि-मुक्तस्य स्वल्पवित्तस्य देहिनः। संसारभयभीतस्य विष्णुभक्तस्य तत्वतः ४८ अग्ना वाज्यान्विते वीजै स्सलिलैः केवलैश्च वा। द्रव्यहीनस्य कुर्वीत वचसा नुग्रहं गुरुः ४९ ननु दीक्षाविधि स्तत्र कथं संपूर्णता मियात्। इति तर्कनिरासाय तत्रैवोक्तं सुरर्षिणा ५० यः समः सर्वभूतेषु विरागो वीतमत्सरः। जितें द्रियः शुचि दक्षः सर्वांगावयवान्वितः ५१ कर्मणा मनसा वाचा भीते वा ऽभयदः सदा। समबुद्धिपदं प्राप्त स्तत्रापि भगवन्मयः ५२ पंचकालपरश्चैव पंचरात्रार्थवि त्तथा। विष्णु तत्वं परिज्ञाय हेयकं चानेकभेदगं ५३ दीक्षयेन्मेदिनीं सर्वां किं पुन श्चोपसन्नतान्। गुरो रेव प्रभावेण ज्ञेया शिष्यकृतार्थता ५४ ॥ इति श्रीसामवेदिश्रीनन्दकिशोरशास्त्रिजदुर्गादत्तकृते दीक्षा विधिनिबंधे मंत्रदानविधिसंपादकं तृतीयं प्रकरणम् ॥ ३ ॥

अथो गृहीतदीक्षस्य नियमा न्मोक्षसाधकान्। तथा च वर्ज्या नविधी न्दर्शयामि शिवोक्तिभिः १ ब्राह्मे मुहूर्त चोत्थानं शौचं स्नानं यथाविधि। तिलकं च ततः संध्या गाय त्री जप मेव च २ तत्पश्चाद् गुरुमंत्रस्य जपं होमं स्वगृह्यजं। अग्निं प्रदक्षिणीकृत्य नमः फलसमर्पणं ३ एवं कृते ततः पश्चादिष्ट पूजाधिकारता। भवे ततः प्रयत्नेन नित्यकर्मसदा चरेत् ४ कृत नित्यक्रियेनाशु कार्य्यं मिष्टप्रबोधनम्। नीराजनं च वाद्येन ततः श्रीदेवतार्चनम् ५ विभवे सति सद्भक्त्या प्रासादे स्थाप्य केशवम्। अष्टयामविधानेन पूजनं क्रमश श्चरेत् ६ साधूना मसमर्थानां यथा लब्धोपचारकैः। पूजनं स्वेष्टदेवस्य स्मृतो वस्त्राग्रहोनहि ७ शालिग्रामशिलापूजा प्रतिमासु च भक्तितः। मनः स्थैर्य्यं मानसी च पूजा सर्वार्थसाधिका ८ अल्पपक्षेषु तथा ज्ञानमात्र स्नेहसमर्पणम्। संविभागः प्रसादस्य चरणामृतसेवनम् ९

ततो गुरुकुलाचार्यमातृपित्रादिवंदनम् । तेषां पूजा भक्तिभावा
द्व्यापारोपार्ज्जनं ततः १० ततो मध्याह्नसत्कर्म स्वाध्यायः
स्नानपूर्वकम् । विष्णुपादोदकेनैव पितृणां तर्पणक्रिया ११ वैश्व
देवविधि र्भक्त्या पश्चा दतिथिसत्क्रिया । ततो जीवन्मातृपितृ
वृद्धेभ्यो भोजनार्पणम् १२ शिशून् गर्भवतीं नारीं भोजये द्धर्मको
विदः । ततो ऽन्नं च स्वयं भुंक्त्वा दापोशानं विधायच १३
निर्माल्यतुलसीभक्ष तांबूलाद्यशनं तथा । ततो व्यापारसंसेवा
यामसात्रं ततः परम् १४ सत्संगसेवासच्छास्त्रश्रवणं मननं तथा ।
सायंसंध्योपासनं च स्वेष्टदेवप्रपूजनम् १५ भगवन्नामजपादि
शयनम् ऋतु सेवनं । पितृणां श्राद्धकरणं स्वेष्टा ऽ भेदसुरार्चनं १६
नवीनफलपुष्यादे र्दैवताभ्यो निवेदनम् । तुलसीपूजनं नित्यं
श्रीभागवत पूजनम् १७ विष्णोरुच्छिष्टस्त्रग्गंधा ऽऽप *ऽन्नवस्त्रादि
सेवनम् । सर्वेषां पुण्यकार्य्याणां स्वामिदृष्ट्या प्रवर्तनम् १८
गुर्वाज्ञा ग्रहणं तत्र विश्वासो गुरुणोदिते । गुरुपादोदका
ऽऽपानं गुरोरुच्छिष्टभोजनम् १९ नीचवद्गुरु सेवा च गुर्वग्रे
सांजलि स्थितिः । यानासनं न गुर्वग्रे मान्यं गुरुकुलं सदा २०
गुरोः पितापरं पूज्यो गुरुपुत्रो गुरु र्यथा । गुरुवत्परिपूज्या
श्च सवर्णा गुरुयोषितः २१ इति दैया स्वगुरवे गृहस्थेना
ऽ नुसारतः । यथार्थमुद्रारचनं गीतनृत्यादिभक्तितः २२
शंखादिध्वनिमांगल्यं लीलाद्यभिनयोहरेः । विशेषधर्मजिज्ञासा
महाशक्तिविवर्जनम् २३ सुखदुःखसमानत्वं स्वास्थ्यं लोके
हरीक्षणम् । विषयालोलुपत्वं च परद्रव्यविवर्ज्जनम् २४ मनो
जयः पराभक्ति र्वैराग्यादिदिनत्रये । व्रते नियमतः स्वास्थ्यं
सन्तोषो येन केनचित् २५ पर्वयात्रादिकरणं वासराष्टक
सद्विधिः । विष्णो स्सर्वर्तु चर्चा च महाराजोपचारतः २६ तथा
हरिहराभेदचिन्तनं पूजनं तयोः । तीर्थेष्वमृतबुद्धि श्च शास्त्रे

* आप्, जलम् ।

त्वीश्वररूपता २७ सर्वेषां चैव साधूनां व्रतिनां च प्रपालनम्।
गुरावीश्वरभावश्च तुलसीसंग्रह स्सदा २८ धर्मार्थकाममोक्षाणां
यथा काल निषेवणम्। ब्राह्मणानां च सत्कारः कामलोभादि
वर्जनम् २९ स्त्रीशूद्रै श्च जपः कार्यो गुरुमन्त्रस्य केवलम्।
पुराणोक्तविधानेन नित्यनैमित्तिकी क्रिया ३० इत्येव न्नियमान्
सेवे त्सदाचारपरायणः। श्रद्धालु रास्तिको ऽतन्द्रो भक्तिभाङ्
नात्र संशयः ३१ अथ चैवमत्रवोऽन्यश्च यानि त्याज्यानि धीमता
कर्माणि विघ्नरूपाणि मुक्तिमार्ग मभीप्सतां ३२ सन्ध्ययोः
शयनन्नैव न शौच म्मृत्तिकां विना। तिष्ठता चमन न्नैव नैव
गुर्वासन न्विशेत् ३३ गुर्वग्रे पादविस्तारं छायाया लङ्घनङ्
गुरोः। शक्तौ स्नानक्रियाहानि र्देवतार्चनलोपनम् ३४ देवता
नां गुरूणां च प्रत्युत्थानाद्यऽभावनम्। गुरोः पुरस्तात्पाण्डित्य
प्रौढपादक्रियां तथा ३५ अमन्त्रतिलकाचामौ नीलवस्त्र-
विधारणम्। अभक्तैः सहमैत्र्यादि ह्यसच्छास्त्रपरिग्रहम् ३६
तुच्छस्वर्गसुखाशक्तिं मद्यमांसनिषेवणम्। मादकौषधिसेवां च
मसूराद्यन्नभोजनम् ३७ शाकं तुम्बीकलिंगादि तथा भक्तान्न
सङ्ग्रहम्। भूतादिकव्रतारम्भ न्तथा भूतादिकं जपम् ३८
अभिचारादि करणम् शक्त्या गौणोपचारकम्। शोकादि
पारवश्यं च दिग्विद्धैकादशीव्रतम् ३९ शुक्ला कृष्णा विभेदं च
सव्यापार म्व्रतं तथा। शक्तौ फलादिभुक्तिं च श्राद्धं चैकादशी
दिने ४० द्वादश्यां च दिवास्वापं तुलस्यऽवचयं तथा। तत्र
विष्णो र्दिवास्नानम् श्राद्धं चैवाऽनिवेदितैः ४१ वृद्धावऽतुलसी
श्राद्ध न्तथा श्राद्ध मवैदिकम्। चरणामृतपानेपि शुद्धयर्थाचमन
क्रियाम् ४२ काष्ठासनोपविष्टेन वासुदेवस्य पूजनम्। पूजा
काले ऽसदा ऽऽलापम् शोकमोहादि चिन्तनम् ४३ आयसं
धूपपात्रादिखण्डित म्मलिन न्तथा। पूजांचाऽसंस्कृतै र्द्रव्यै

स्तथा चञ्चलमानसम् ४३ एकहस्तप्रणामादि ह्यकाले स्वामि दर्शनम्। पर्युषितादिदुष्टाना मन्नादीनां निवेदनम् ४५ संख्यां विना मन्त्रजप स्तथा मन्त्रप्रकाशनम्। मुख्यकाल परित्यागं गौणकालपरिग्रहम् ४६ निन्दां तु पैशुन स्तन्द्रां स्तेयं स्त्रैणत्व मेव च। प्रसादा ऽग्रहणं विष्णो र्वर्ज्जयेत् सर्वदा सुधीः ४७ ॥ मनुस्मृतौ ॥ न गुरो रप्रियं कार्यं ताडितः पीडितो पि वा। नावमन्येत तद्वाक्य न्ना ऽप्रियं हि समाचरेत् ४८ नोदाहरेद्गुरो र्नाम परोक्ष मपि केवलम्। न चैवा स्यानुकुर्वीत गतिभाषणचेष्ठितम् ४९ गृह्णीया द्यदि तन्नाम तत्राय म्बिधि रुच्यते। देवर्षिणा नारदेन पञ्चरात्रे दयालुना ५० प्रणवः श्री स्ततो नाम विष्णुशब्दोप्यनन्तरम्। पादशब्दे समेतः स्या न्नतमूर्द्धा ऽञ्जलीयुतः ५१ स्वमन्त्रो नोपदेष्टव्यो वक्तव्यश्च न संसदि। गोपनीयं तथा शास्त्रं रक्षणीयं शरीरवत् ५२ यत्र यत्र परीवादो मात्सर्य्या च्छ्रूयते गुरोः। तत्र तत्र न वस्तव्यं निर्यायात्संस्मर न्हरिम् ५२ यैः कृता च गुरोर्न्निंदा विभोः शास्त्रस्य नारद। नाऽपि तैस्सह वस्तव्यं वक्तव्यं वाकयञ्चन ५३ ॥ कौर्म्ये ॥ गुरो र्निमाल्यशयने पादुकोपानहावपि। नाक्रमेदासनं छायां वासन्दीं वाकदाचन ५५ एवं यो वर्ज्जये द्वर्ज्या न्साध्यान्संसाधयेत्सदा। नरो वर्णाश्रम युतो नूनं भवति मुक्तिभाक् ५६ ॥ इति श्रीसामवेदिश्रीनन्दकिशोरशास्त्रिसुतदुर्गादत्तकृते दीक्षाविधिनिबन्धे कर्तव्याऽकर्तव्य संपादकन् चतुर्थं प्रकरणम् ॥ ४ ॥ अथ स्त्रीणां सदाचारः प्रोच्यते ऽद्य समासतः। ताभिः संसेवितो नूनं मिहा मुत्र सुख प्रदः १ अपुत्रासधवा वापि धर्मं वेदार्थसम्मतम्। य माश्रित्य समाप्नोति पत्या सह परंपदम् २ पत्युः पूर्वं समुत्थानम् पत्या भेदहरि स्मृतिः। शौचक्रिया रात्रिधृतां ऽशुकत्यागो ऽस्य धौतता

आर्द्रेण वाससा देहक्षालनं गृहमार्जनम्। आदर्शे स्वमुखा लोकं कंकतया केशसाधनम् ४ ललाटे कुंकुमधृति रंजनादिक धारणम्। तत एव पृथवी पूजा देहाभ्यंगः सुतैलजः ५ ततः कराठा दधः स्नानं व्रतत्वादौ समस्तकम्। युग्मवस्त्रपरीधानं पत्युरुद्बोधनं ततः ६ वन्दनं प्रार्थनं भक्त्या शौचार्थं च जलार्पणम्। स्नापयित्वा वस्त्रयुग्मं दत्वा पूजासने पतिम् ७ संस्थाप्य च नमस्कृत्य चंदनादिक मर्पयेत्। ध्यानाशक्तं पतिं वीक्ष्य विदुष्या होमसाधनम् ८ शोधयेदग्नि कार्याणि स्निग्धान्युष्णेन वारिणा। प्रोक्षणीं रति तान्येव यथा स्थानं प्रकल्पयेत् ९ हव्यपात्राणि सर्वाणि न कदाचि द्वियोज येत्। पत्यासहैव होमादि कर्मानुष्ठान माचरेत् १० पत्या तुवैदिकं कर्म द्विजस्त्री कर्तु मर्हति। ततश्चैव स्वयं कुर्या दान- ता पतिपूजनम् ११ ॥ ॐ नमः कांताय शांताय सर्वदेवाश्रयाय स्वाहा ॥ इत्यनेनैव मन्त्रेण दत्वा पुष्पं सचन्दनम्। पाद्यार्घ्यं धूपदीपौ च वस्त्र न्नैवेद्य मुत्तमम् १२ फलं सुवासित शुद्ध न्तांबूलं च सुवासितम्। दत्वा प्रदक्षिणीकृत्य स्तोत्र मेत दुदाहरेत् १३ ॐ नमः कांताय भर्त्रे च शिरश्चन्द्रस्वरूपिणे। नमः शांताय दांताय सर्वदेवाश्रयाय च १४ नमो ब्रह्मस्वरूपाय सतीप्राणपराय च। नमस्याय च पूज्याय हृदाऽऽधाराय ते नमः १५ पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च। ज्ञानाधाराय पत्नीनां परमानन्दरूपिणे १६ पति र्ब्रह्मा पति र्विष्णुः पति रेव महेश्वरः। पतिश्च निर्गुणाधारो ब्रह्मरूप नमोस्तु ते १७ क्षमस्व भगव न्दोषं ज्ञानाऽज्ञानकृतं च यत्। पत्नीबन्धो दयासिन्धो दासीदोषं क्षमस्व मे १८ इति स्तुत्वा प्रणम्यापि पिबे त्तच्चर- णोदकम्। तत स्तदाज्ञां संप्राप्य तुलसीपूजनं चरेत् १९ नत्वा च पत्युः पित्रादीन् स्वस्रूसेवां समाचरेत् २० पत्युः शैय्या

त्थापनं च बालानां शौचभोजने । करायित्वा नवैधं च कुर्या
द्वा कारयेत वा २१ पाकस्थाने पयःस्थाप्य कुर्याच्च दधिमन्थनम्
पातराशं च कुर्याच्चेद् गुर्विणी बालपुत्रका २२ मृद्भिश्च शोधये
च्चुल्लीं तत्राऽग्निं विन्यसेत्ततः । स्मृत्वा नियोगपात्राणि
रसांश्च विविधानि च २३ ततः स्नात्वा पाकशालां गत्वा
पाकं विधाय च । निवेद्य पतये पाकं वैश्वदेवादि कारयेत् २४
श्वश्रूश्वशुरपत्यादीन्प्रेम्णा बालांश्च भोजयेत् । तेभ्यो दत्त्वा
तु पूगादि भुंज्यादन्नं ततः स्वयम् २५ किञ्चिद्विश्रम्य कुर्या
च्च पाकशालादि शोधनम् । कुट्टनादिकसंस्कारं ततोऽस्य
समाचरेत् २६ स्पृष्ट्वाऽप श्च ततः कुर्यात् हस्तालंकारधारणम् ।
वृद्धाभिः सहिता स्थित्वा पुराणश्रवणं चरेत् २७ पतिव्रतानां
चरितं श्रुत्वा मनसि धारयेत् । कृत्वा स्वशिशुशिक्षां च ततः
स्नानं समाचरेत् २८ पत्याऽग्निहोत्रं संसेव्य पाकसिद्धिं विधाय
च । वैश्वदेवं स्वयं कुर्याद् भोजनीयांश्च भोजयेत् २९ आस्तीर्य
शैय्याः श्वस्रादेर्जलं तत्र निधाय च । भुक्त्वा च गृहभांडस्य वस्तु
रक्षां यथा चरेत् ३० पाकभांडानि संशोध्य दुग्धे जातकं सर्पयेत्
श्वस्रादिसेवां कुर्याच्च दीपेनालयवीक्षणम् ३१ शयनीयांशुकं धृत्वा
पतिशैय्यागृहं व्रजेत् । पत्युः सेवां संविधाय स्वयं सुप्यात्तदा
ज्ञया ३२ इति स्त्रीणां माह्निकं च संक्षेपेण प्रकीर्तितम् । अतः
परं शास्त्रवाक्यैरन्यदावश्यकं ब्रुवे ३३॥ स्कान्दे ॥ प्रसुप्तं सुखा
सीनं रममाणं यदृच्छया । आतुरेष्वपि कालेषु पतिं नोत्थापये
त्क्वचित् ३४ हरिद्रां कुंकुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकं
च ताम्बूलं मांगल्याभरणं शुभम् ३५ केशसंस्कारकवरी करकर्ण
विभूषणम् । भर्तुरायुष्यमिच्छन्ती दूरयेन्न कचित्सती ३६
नियमोदकबर्हींष्च पत्रपुष्पादिकं च यत् । सेवेत भर्तुरुच्छिष्ट
मिष्टमन्नफलादिकम् ३७ तीर्थस्नानार्थिनी नारी पतिपादोदकं

पिवेत् । शङ्करादपि विष्णो र्वा पति रेको विशिष्यते ३८
॥ व्यासस्मृतौ ॥ द्वारोपवेशनं नित्यं गवाक्षेण निरीक्षणम् । असत्प्रलापौ हास्यं च दूषणं कुलयोषिताम् ३९ ॥ ब्रह्मवैवर्ते ॥ व्रतं तपस्यां देवार्चां परित्यज्य प्रयत्नतः । कुर्या च्चरणसेवां च स्वकान्तपरितोषणम् ४० तदाज्ञारहितं कर्म न कुर्या द्दैवतः सती । नारायणात्परं कान्तं ध्यायते सततं सती ४१ परं पुंसां परं चैव सुरेशपुरुषं परं । यात्राम् महोत्सवं नृत्यं नर्तकं गायनम्भुजं* ! ४२ परक्रीडां च सततं नहि पश्येत सुव्रता । यद् भक्ष्यं स्वामिना मेव तदेव मपि योषिताम् ४३ नहि त्यजे त्तु तत्सङ्गं क्षणमेव च सुव्रता । उत्तरेणोत्तरं दद्या त्स्वामिन श्च पतिव्रता ४४ न कोपं कुरुते शुद्धा ताडितापि च कोपतः । क्षुधितं भोजये त्कान्तं दद्यात्पानं च भोजनम् ४५ यदा रजः प्रजायेत तदा स्याद् ब्रह्मचारिणी । हविष्यभोजिनी हस्ते दर्भसंस्तरशायिनी ४६ दिवास्वापांजना ऽऽ कल्पा ऽश्रु पातस्नानचन्दनम् । प्रधावननखच्छेदहास्योच्चैर्भाषणं त्यजेत् ४७ ॥ बृहन्नारदीये ॥ त्रेता प्रभृतिनारीणां मासि मास्यार्तवं मुने । तदा दिनत्रयं त्यक्त्वा शुद्धा स्याद् गृहकर्मणि ४८ मैथुनं मानसं वापि वाचिकन्देवतार्चनम् । वर्जये त्तु नमस्कारं देवतानां रजस्वला ४९ स्नात्वा न्य त्पुरुषं नारी न पश्ये त्तु रजस्वला । ईक्षेत भास्करं देवं ब्रह्मकूर्चं※ ततः पिबेत् ५० या नारी विधवा सा पि पूर्ववदान्हिकं चरेत् । विशेषस्तत्र तस्या यः सो पि चाद्य प्रकथ्यते ५१ ब्राह्मे मुहूर्ते चोत्थाय स्मृत्वा ऽजं पतिरूपिणं । देहशुद्धिं ततः स्नानं कृत्वा पूजां समारभेत् ५२ पत्यु श्च प्रतिमायां वा पतिपादुकयो स्तथा । तदऽभावे प्रयत्नेन शालिग्रामे ऽर्चयेत्पतिम् ५३ विष्णोस्तुपूजनं कार्यं पत्यऽभेदेन नान्यथा । पति मेव सदा ध्याये द्विष्णुरूपधरं हरिम् ५४ नारायणा त्परं

* भ्रमद्वृति मंदसंबोधनम् । ※ ब्रह्मकूर्चं पंचगव्यं ।

कान्तं ध्यायते सततं सती । सर्वपुण्यस्वरूप श्च पतिरूपी जना-
र्द्दनः ५५ सति भर्तरि या पूजा सैव तस्मि न्मृतेऽपि च । साम
वेदोक्तमंत्रेण स्तोत्र वै पूर्ववत्स्मृतम् ५६ तर्पण म्प्रत्यहं कार्यं
भर्तुः कुशतिलोदकैः । तत्पितुः तत्पितुश्चापि नाम गोत्रादि
पूर्वकम् ५७ गुरुमन्त्रजपो ध्यान म्वैश्वदेव विधिस्तथा । स्वहस्त
पाको वृद्धानां सेवा तदनुकूलता ५८ ॥ काशीखण्डे ॥ यद्यदिष्ट-
तमं लोके यच्च पत्युः समीहितम् । तत्तद् गुणवते देयं पति
प्रीणनकाम्यया ५९ वैशाखे कार्त्तिके माघे विशेषनियमां श्चरेत्
स्नान न्दान न्तीर्थयात्रां विष्णो र्नामग्रहं मुहुः ६० भर्तृ स्व-
रूपो भगवा न्प्रीयता मिति चोच्चरेत् । एवं धर्मा परा नित्यं
विधवा अपि शुभा मता ६१ ॥ बृहन्नारदीये ॥ विधवा कवरी
बधो भर्तृबंधाय जायते । शिरसो वपनं कार्य्यं तस्मा द्विधवया
सदा ६२ एकाहारः सदाकार्य्यो न द्वितीयः कदाचन पर्य्यंकशा
यनी नारी बिधवा पातये त्पतिम् ६३ तस्माद् भूशयनं कार्यं
पतिसौख्यसमीहया । नैवांगोद्वर्तनं कार्यं तांबूलस्य च भक्षणम्
६४ ॥ बृहद्धारीतस्मृतौ ॥ केशरांजनतांबूलगंधपुष्पादिसेवनम् ।
भूषितं रंगवस्त्रं च कांश्यपात्रे च भोजनम् ६५ द्विवारभोज-
नम् चाक्ष्णो रंजनं बर्ज्जये त्सदा । कंचुकीं चंदनं लाक्षां शंख
सिन्दूरभूषणम् ६६ रक्तशाकं मसूरं च जंबीरं पर्ण मेव च ।
अलाबुकुम्भीमांसादिबर्ज्जनीयां श्च वर्ज्जयेत् ६७ पत्युः पितु
र्वा गेहस्था हरिनाम सदा जपेत् । नतु स्वतन्त्रा यतिवद् भ्रमे
च्चेत्पतिता भवेत् ६८ ॥ ब्रह्मवैवर्ते ॥ मिष्टान्नं न च भुंक्ते सा न
कुर्य्या द्विभवं व्रज । एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदि-
ने ६९ श्रीरामनवम्यां तु शिवरात्रौ पवित्रया । अघोरायां च
प्रेतायां चन्द्रसूर्योप रागयोः ७० तैलाभ्यंगं न कुर्वीत नहि प-
श्येत दर्पणं । मुखं च परपुंसां च यात्रां नृत्यं महोत्सवम् ७१

॥मनुस्मृतौ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा पतिलोकमभीप्संती नाचरेत्किञ्चिदप्रियम् ७२ कामं तु क्षपये द्देहं पुष्पमूलफलैः शुभैः। नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ७३ नान्योत्पन्ना प्रजा ऽस्तीह न चाप्यऽन्यपरिग्रहे। न द्वितीयश्च नारीणां क्वचिद्भर्तोपदिश्यते ७४ अनेन नारी वृत्तेन मनोवाग्देहसंयता। इहाग्र्यकीर्तिमाप्नोति पतिलोकं परत्रच ७५ एवं विधा न्मोक्षधर्मा नुपदिश्य च कारयेत्। शिष्यशिष्याभिरव्यग्रो गुरुश्च गुरुता तदा ७६ ॥ इति श्रीसामवेदिश्रीनंदकिशोरशास्त्रिसूनुदुर्गादत्तकृते दीक्षाविधिनिबंधे स्त्रीशिक्षाविधानं पंचमं प्रकरणम्. ५ ॥ अथातः शास्त्रवचनै र्गुरु माहात्म्यमुच्यते। यदुक्तं श्रीगिरीशेन पार्वत्यै हितकाम्यया १ कैलासशिखरे रम्ये भक्तिसाधनहेतवे। प्रणम्य पार्वती भक्त्या शंकरं परिपृच्छति २ ॥ श्रीपार्वत्युवाच॥ ॐ नमो देवदेवेश परात्पर जगद्गुरो। सदाशिव महादेव गुरुदीक्षां प्रयच्छ मे ३ केन मार्गेण भो स्वामिन्देही ब्रह्ममयो भवेत्। त्वं कृपां कुरु मे देव नमामि चरणं तव ४ ॥श्रीमहादेव उवाच॥ अग्नि र्गुरुः* द्विजातीनां वर्णानां ब्राह्मणो गुरुः ५ पति रेव गुरुः स्त्रीणां सर्वतो ऽभ्यागतो गुरुः। यस्य देवे परा भक्ति र्यथा देवे तथा गुरौ ६ तस्य ते कथिता ह्यर्थाः प्रकाशंते महात्मनः। अभक्ते वंचके धूर्ते पाखण्डे नास्तिके नरे ७ मनसापि न वक्तव्यं गुरुगीताभिध म्प्रिये। ध्यानमूलं गुरो र्मूर्तिः पूजामूलं गुरोः कृपा ८ मन्त्रमूलं गुरो र्वाक्यं मोक्ष मूलं गुरोः कृपा। सप्तसागरपर्यंत तीर्थस्नानादिजं फलम् ९ गुरो रंघ्रिपयो विन्दु कोटांशेनापि दुर्लभम्। गुरोः पादोदकं सेवेद् गुरो रुच्छिष्टभोजनम्। गुरुमूर्तिं सदा ध्यायेद् गुरुस्तोत्रं सदा जपेत् १० गुरुपादोदकं पीत्वा पश्चा च्छिरसि धारयेत्। शोषणं पापपंकस्य दीपनं

*अस्मिन् श्लोके गुरुशब्दः पूज्यपरः नतु मन्त्रदानपरः मन्तव्य इन गुरुः पूर्व ...

ज्ञान तेजसां ११ अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया।
चक्षु रुन्मीलितं येन तस्मै श्रीगुरवे नमः १२ अखण्डमंड-
लाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्री
गुरु० १३ चैतन्यं शाश्वतं शान्तं व्योमातीत न्निरंजनम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरु० १४ चिन्मयं व्यापियत्सर्वं
त्रैलोक्यं सचराचरम्। तत्पदं दर्शितं येन त० १५ संसारवृक्ष मा
रूढं पतित न्नरकार्णवे। येनोद्धृत मिदं विश्वं तस्मै श्री० १६
चैतन्यं शाश्वतं शुद्धं व्योमातीतं यदुच्यते। नादविन्दु
कलातीत तस्मै० १७ न गुरो रधिकं तत्त्वं न गुरो रधिकं तपः।
गुरुज्ञाना त्परं नास्ति तस्मै० १८ गुरु र्ब्रह्मा गुरु र्विष्णु र्गुरु र्देवो
महेश्वरः। गुरु रेव परं ब्रह्म तस्मै० १९ आनंद मानन्दकरं
प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम्। योगीन्द्र मीड्यं भवरोग
वैद्यं श्रीमद्गुरुं नित्य महं नमामि २० ब्रह्मानंदं परमसुखदं
केवलम् ज्ञानमूर्तिं द्वंद्वातीतं गगनसदृशं तत्त्वमस्यादिल
क्ष्यम्। एकं नित्यं विमल मचलं सर्वधी साक्षिभूतं भावातीतं
त्रिगुण रहितं सद्गुरुं तं नमामि २१ आसनं शयनं
वस्त्रं वाहनं भूषणादिकम्। साधकेन प्रदातव्यं गुरोः संतोष
कारकम्। गुरुसेवा परं तीर्थं तदग्रे न्य न्निरर्थकम्। सर्व
तीर्थाश्रयो देवि श्रीगुरो श्चरणांबुजम् २२ क्रिमिविड्भस्म
निष्ठान्तं दुर्गंधमलमूत्रकम्। श्लेष्मरक्तत्वगाद्युक्तं वपु रित्य
वरानने २४ अतोस्यस्नेह मुत्सृज्य गुरुसेवा परोभवेत्।
गुरूच्छिष्टोपसेवी च गुरुपादोदकं पिबेत् २५ अज्ञान मूल
हरणं जन्म कर्म निवारणम्। ज्ञान वैराग्य सिद्ध्यर्थं गुरु-
पादोदक म्पिबेत् २६ गुरुलोपो न कर्तव्यो स्वच्छन्दो
यदि वा भवेत्। गुरुशापहतः क्षीणः क्षयं याति न
संशयः २७ न गुरो रधिकं न गुरो रधिकं न गुरो रधिकं

न गुरो रधिकम् । शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः २८ गुरु रादि रनादि श्च गुरुः परमदैवतम् । गुरोः परतरं नास्ति तस्मा त्सम्पूजयेद् गुरुम् २९ संसारकुहरावर्तें घटियन्त्रे घटो यथा । न मुक्ता देवगंधर्वा गुरुसेवापराङ्मुखाः २९ कर्मणा मनसा बाचा सद्भि राराध्यते गुरुः । दीर्घदण्ड नमस्कुर्य्या न्निर्ल्लज्जो गुरुसन्निधौ ३० हरौ रुष्टे गुरु स्त्राता गुरौ रुष्टे न कश्चन । तस्मा त्सर्वप्रयत्नेन श्री गुरोः शरण मव्रजेत् ३१ यश्शिवः सशिवः प्रोक्तो यः शिवः सगुरुः स्मृतः । बिकल्पं यस्तु कुर्बीत स नरो गुरुतल्पगः ३२ यो वै हुं कृत्य तुं कृत्य गुरुं निर्ज्जित्य बादतः । अरण्ये निर्ज्जने देशे स भवेद् ब्रह्मराक्षसः ३३ हुंकारेण न बक्तव्यं प्राज्ञशिष्यैः कदाचन । गुरो रग्रे न बक्तव्य मसत्यं च बरानने ३४ एकाक्षर प्रदातारं यो गुरुं नैव मन्यते । स याति नरकं घोरं याव च्चन्द्रदिवाकरौ ३५ गुरोः कृपाप्रसादेन ब्रह्मबिष्णुमहेश्वराः । समीपस्थाः प्रसन्नास्ते केवलं गुरुसेवया ३६ मन्त्रराज मिदं देवि गुरुरित्यक्षरद्वयम् । श्रुति वेदांत वाक्येन गुरुः साक्षात्परम्पदम् ३७ गुरु पिता गुरुर्माता गुरु श्च ज्येष्ठवांधवः । शब्दे शब्दे गुरुश्चैव सर्वतोऽभ्यागतोगुरुः ३८ अतीव पक्वचित्तस्य श्रद्धाभक्ती विलोक्य च प्रवक्तब्य मिदं देवि ममात्मासि सदा प्रिये ३९ गुरवो वहवः सन्ति शिष्यबित्तापहारकाः । दुर्ल्लभोऽयं गुरु र्द्देवि शिष्यसंतापहारकः ४० धन्या माता पिता धन्यो धन्यं वै तत्कुलं तथा । धन्या च बसुधा यस्य गुरुभक्तिः सुदुर्ल्लभा ४१ संसारसागरसमुद्धरणैकमन्त्रं ब्रह्मादिदेवमुनि पूजितसिद्धमन्त्रं । दारिद्र्यदुःखभयशोकविनाशमन्त्रं वन्दे महा भयहरं गुरुराजमन्त्रम् ४२ इद रहस्यं परमं यः पठे च्छृणुया दपि । तत्फलं समवाप्नोति भुक्तिं मुक्तिं च बिंदति ४४

रोगार्तो मुच्यते रोगा द्बद्धो मुच्येत बन्धनात् । भयान्मुच्येत भीतस्तु जपेद्यो दृढमानसः ४५ विद्यार्थी लभते विद्यां धनार्थी प्राप्नुया द्धनम् । पुत्रार्थी प्राप्नुया त्पुत्रं मोक्षार्थी मोक्ष माप्नु यात् ४५ दुर्गादत्तनिबंधस्य श्रोतृवाचकयोः किल । गुरुरूपी जगन्नाथः प्रीयतां कृपया सदा ४६ दीक्षाकाले तथा बाढ्यां यं श्रावयति भक्तितः । शृखवंत्येनं निबंधंये तेसर्वे मुक्तिभागिनः ४७

इति श्रीसामवेदिश्रीनन्दकिशोरशास्त्रिसूनुदुर्गादत्तकृते दीक्षाविधिनिबंधे गुरुमहिमादर्शकं षष्टं प्रकरणम् ॥६॥ *

समाप्तोयं निबन्धः । श्रीगुरुनारायणार्पणमस्तु ।

श्रीमच्छ्रीहरिनामदासगुरुपत्कंजेभ्य आप्ता ऽ क्षर
स्सो ऽहं नन्दकिशोरतातचरणै र्दृष्ट्या ऽद्रया पालितः ।
दुर्गादत्त इतीरित श्च जननीपादै श्च याचे कवीन्
स्यादस्मिन् यदिकिञ्चिदूनमधिकं तच्छोध्यमात्मीयवत् ॥

रायाख्ये नगरे ऽष्टजयोजनमिते पूर्वं मथोः पत्तना
न्मत्पूर्वाचरितां चिरा च्च वसतिं संत्यज्य पित्रो र्मुदे ।
राधाकृष्णपदाब्जसेवनधिया तिष्ठामि वृन्दावने
ऽतः प्राप्ति र्भविता ऽस्य तत्र नितरां ग्रन्थस्य लिप्सावताम् ॥

॥ शुभम्भूयात् ॥